अपि तु तदभावेऽभावलक्षणो व्यतिरेकोऽपि । न चासावर्थालोकयोर्हेतुभावेऽस्ति; मरुमरीचिकादौ जलाभावेऽपि जलज्ञानस्य, वृषदंशादीनां चालोकाभावेऽपि सान्द्रतमतमःपटलविलिप्तदेशगतवस्तुप्रतिपत्तेश्च दर्शनात् । योगिनां चातीतानागतार्थग्रहणे किमर्थस्य निमित्तत्वम् ? । निमित्तत्वे चार्थक्रियाकारित्वेन सत्त्वादतीतानागतत्वक्षतिः ।

5 § ९३. न च प्रकाश्यादात्मलाभ एव प्रकाशकस्य प्रकाशकत्वम्, प्रदीपादेर्घटादिभ्योऽनुत्पन्नस्यापि तत्प्रकाशकत्वदर्शनात् । ईश्वरज्ञानस्य च नित्यत्वेनाभ्युपगतस्य कथमर्थजन्यत्वं नाम ? । अस्मादादीनामपि जनकस्यैव ग्राह्यत्वाभ्युपगमे स्मृतिप्रत्यभिज्ञानादेः प्रमाणस्याप्रामाण्यप्रसङ्गः । येषां चैकान्तक्षणिकोऽर्थो जनकश्च ग्राह्य इति दर्शनम् तेषामपि जन्यजनकयोर्ज्ञानार्थयोर्भिन्नकालत्वान्न ग्राह्यग्राहकभावः सम्भवति । अथ न जन्यजनक-
10 भावातिरिक्तः सन्दंशायोगोलकवत् ज्ञानार्थयोः कश्चिद् ग्राह्यग्राहकभाव इति मतम्,

"भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः ।
हेतुत्वमेव युक्तिज्ञा ज्ञानाकारार्पणक्षमम्" [प्रमाणवा० ३. २४७]

इति वचनात्; तर्हि सर्वज्ञज्ञानस्य वार्तमानिकार्थविषयत्वं न कथञ्चिदुपपद्यते वार्तमानिकक्षणस्याजनकत्वात् अजनकस्य चाग्रहणात् । स्वसंवेदनस्य च स्वरूपाजन्यत्वे कथं ग्राहकत्वं
15 स्वरूपस्य वा कथं ग्राह्यत्वमिति चिन्त्यम् । तस्मात् स्वस्वसामग्रीप्रभवयोर्दीपप्रकाशघटयोरिव ज्ञानार्थयोः प्रकाश्यप्रकाशकभावसम्भवान्न ज्ञाननिमित्तत्वमर्थालोकयोरिति स्थितम् ।

§ ९४. नन्वर्थाजन्यत्वे ज्ञानस्य कथं प्रतिकर्मव्यवस्था ?, तदुत्पत्तितदाकारताभ्यां हि सोपपद्यते, तस्मादनुत्पन्नस्यातदाकारस्य च ज्ञानस्य सर्वार्थान् प्रत्यविशेषात्; नैवम्; तदुत्पत्तिमन्तरेणाप्यावरणक्षयोपशमलक्षणया योग्यतयैव प्रतिनियतार्थप्रकाशकत्वोपपत्तेः ।
20 तदुत्पत्तावपि च योग्यतावश्याश्रयणीया, अन्यथाऽशेषार्थसान्निध्येऽपि कुतश्चिदेवार्थात् कस्यचिदेव ज्ञानस्य जन्मेति कौतस्कुतोऽयं विभागः । तदाकारता त्वर्थाकारसङ्क्रान्त्या तावदनुपपन्ना, अर्थस्य निराकारत्वप्रसङ्गात् । अर्थेन च मूर्तेनामूर्तस्य ज्ञानस्य कीदृशं सादृश्यमित्यर्थविशेषग्रहणपरिणाम एव साभ्युपेया । अतः-

"अर्थेन घटयत्येनां नहि मुक्त्वाऽर्थरूपताम्" [प्रमाण वा० ३.३०५]

25 इति यत्किञ्चिदेतत् ।

§ ९५. अपि च व्यस्ते समस्ते वैते ग्रहणकारणं स्याताम् । यदि व्यस्ते; तदा कपालाद्यक्षणो घटान्त्यक्षणस्य, जलचन्द्रो वा नभश्चन्द्रस्य ग्राहकः प्राप्नोति, तदुत्पत्तेस्तदाकारत्वाच्च । अथ समस्ते; तर्हि घटोत्तरक्षणः पूर्वघटक्षणस्य ग्राहकः प्रसजति । ज्ञानरूपत्वे सत्येते ग्रहणकारणमिति चेत्; तर्हि समानजातीयज्ञानस्य समनन्तरपूर्वज्ञानग्राहकत्वं प्रस-
30 ज्येत । तन्न योग्यतामन्तरेणान्यद् ग्रहणकारणं पश्यामः ॥ २५ ॥

---

१ ०विलुप्त० । २ किमर्थनिमि०-ता० । ३ प्रका···दात्म०-ता० । ४ ग्राह्यत इति-डे० । ५ सार्वज्ञ०-डे० । ६ तस्मात् स्वसाम०-डे० । ७ -०प्रभवयोः प्रका०-डे । ८ -०णाम स एवाभ्यु०-ता० । ९ -०पेया ततः-डे० ।

§९६. 'अवग्रहेहावायधारणात्मा' इत्युक्तमित्यवग्रहादीँल्लक्षयति—

**अक्षार्थयोगे दर्शनानन्तरमर्थग्रहणमवग्रहः ॥ २६ ॥**

§९७. 'अक्षम्' इन्द्रियं द्रव्यभावरूपम्, 'अर्थः' द्रव्यपर्यायात्मा तयोः 'योगः' सम्बन्धोऽनतिदूरासन्नाव्यवहितदेशाद्यवस्थानलक्षणा योग्यता । नियता हि सा विषयविषयिणोः, यदाह, 5

"पुट्ठं सुणेइ सद्दं रूवं पुण पासए अपुट्ठं तु ॥" [ आव० नि० ५ ]

इत्यादि । तस्मिन्नक्षार्थयोगे सति 'दर्शनम्' अनुल्लिखितविशेषस्य वस्तुनः प्रतिपत्तिः । तदनन्तरमिति क्रमप्रतिपादनार्थमेतत् । एतेन दर्शनस्यावग्रहं प्रति परिणामितोक्ता, नह्यसत एव सर्वथा कस्यचिदुत्पादः, सतो वा सर्वथा विनाश इति दर्शनमेवोत्तरं परिणामं प्रतिपद्यते । 'अर्थस्य' द्रव्यपर्यायात्मनोऽर्थक्रियाक्षमस्य 'ग्रहणम्', 'सम्यगर्थनिर्णयः' इति 10 सामान्यलक्षणानुवृत्तेर्निर्णयो न पुनरविकल्पकं दर्शनमात्रम् 'अवग्रहः' ।

§९८. न चायं मानसो विकल्पः, चक्षुरादिसन्निधानापेक्षत्वात् प्रतिसङ्ख्यानेनाप्रत्याख्येयत्वाच्च । मानसो हि विकल्पः प्रतिसङ्ख्यानेन निरुध्यते, न चायं तथेति न विकल्पः ॥ २६ ॥

**अवगृहीतविशेषाकाङ्क्षणमीहा ॥ २७ ॥** 15

§९९. अवग्रहगृहीतस्य शब्दादेरर्थस्य 'किमयं शब्दः शाङ्खः शार्ङ्गो वा' इति संशये सति 'माधुर्यादयः शाङ्खधर्मा एवोपलभ्यन्ते न कार्कश्यादयः शार्ङ्गधर्माः' इत्यन्वयव्यतिरेकरूपविशेषपर्यालोचनरूपा मतेश्चेष्टा 'ईहा' । इह चावग्रहेहयोरन्तराले अभ्यस्तेऽपि विषये संशयज्ञानमस्त्येव आशुभावात्तु नोपलक्ष्यते । न तु प्रमाणम्, सम्यगर्थनिर्णयात्मकत्वाभावात् । 20

§१००. ननु परोक्षप्रमाणभेदरूपमूहाख्यं प्रमाणं वक्ष्यते तत्कस्तस्मादीहाया भेदः ? । उच्यते—त्रिकालगोचरः साध्यसाधनयोर्व्याप्तिग्रहणपटुरूहो यमाश्रित्य "व्याप्तिग्रहणकाले योगीव सम्पद्यते प्रमाता" इति न्यायविदो वदन्ति । ईहा तु वार्त्तमानिकार्थविषया प्रत्यक्षप्रभेद इत्यपौनरुक्त्यम् ।

§१०१. ईहा च यद्यपि चेष्टोच्यते तथापि चेतनस्य सेति ज्ञानरूपैवेति युक्तं प्रत्यक्ष- 25 भेदत्वमस्याः । न चानिर्णयरूपत्वादप्रमाणत्वमस्याः शङ्कनीयम्; स्वविषयनिर्णयरूपत्वात्, निर्णयान्तरासादृश्ये निर्णयान्तराणामप्यनिर्णयत्वप्रसङ्गः ॥२७॥

**ईहितविशेषनिर्णयोऽवायः ॥ २८ ॥**

§१०२. ईहाक्रोडीकृते वस्तुनि विशेषस्य 'शाङ्ख एवायं शब्दो न शार्ङ्गः' इत्येवंरूपस्यावधारणम् 'अवायः' ॥ २८ ॥ 30

१पारिणामिककारणतोक्ता-डे० । २ बौद्धानामिव । ३ अनिराकार्यत्वात् । ४ विरुद्धार्थचिन्तनेन । ५-०विशेषका०-डे० । ६ शाङ्ख०-डे० । ७ स्वविषये निर्णयत्वात्-डे० ।

## स्मृतिहेतुर्धारणा ॥ २९ ॥

§ १०३. 'स्मृतेः' अतीतानुसन्धानरूपाया 'हेतुः' परिणामिकारणम्, संस्कार इति यावत्, सङ्ख्येयमसङ्ख्येयं वा कालं ज्ञानस्यावस्थानं 'धारणा'। अवग्रहादयस्तु त्रय आन्तर्मौहूर्त्तिकाः।

5 § १०४. संस्कारस्य च प्रत्यक्षभेदरूपत्वात् ज्ञानत्वमुन्नेयम्, न पुनर्यथाहुः परे[1]– "**ज्ञानादतिरिक्तो भावनाख्योऽयं संस्कारः**" इति। अस्य ह्यज्ञानरूपत्वे ज्ञानरूपस्मृतिजनकत्वं न स्यात्, नहि सत्ता सत्तान्तरमनुविशति। अज्ञानरूपत्वे चास्यात्मधर्मत्वं न स्यात्, चेतनधर्मस्याचेतनत्वाभावात्।

§ १०५. नन्वविच्युतिमपि धारणामन्वशिषन् वृद्धाः, यद्भाष्यकारः–"**अविचुई**
10 **धारणा होई**" [विशेषा० गा० १८०] तत्कथं स्मृतिहेतोरेव धारणात्वमसूत्रयः?। सत्यम्, अस्त्यविच्युतिर्नाम धारणा, किन्तु साऽवाय एवान्तर्भूतेति न पृथगुक्ता। अवाय एव हि दीर्घदीर्घोऽविच्युतिर्धारणेत्युच्यत इति। स्मृतिहेतुत्वाद्वाऽविच्युतिर्धारणयैव सङ्गृहीता। न ह्यवायमात्रादविच्युतिरहितात्[3] स्मृतिर्भवति, गच्छत्तृणस्पर्शप्रायाणामवायानां परिशीलनविकलानां स्मृतिजनकत्वादर्शनात्। तस्मात् स्मृतिहेतू अविच्युतिसंस्कारावनेनस-
15 ङ्गृहीतावित्यदोषः। यद्यपि स्मृतिरपि धारणाभेदत्वेन सिद्धान्तेऽभिहिता तथापि परोक्षप्रमाणभेदत्वादिह नोक्तेति सर्वमवदातम्।

§ १०६. इह च क्रमभाविनामप्यवग्रहादीनां कथञ्चिदेकत्वमवसेयम्। विरुद्धधर्माध्यासो ह्येकत्वप्रतिपत्तिपरिपन्थी। न चाऽसौ प्रमाणप्रतिपन्नेऽर्थे प्रत्यर्थितां भजते। अनुभूयते हि खलु हर्षविषादादिविरुद्धविवर्त्ताक्रान्तमेकं चैतन्यम्। विरुद्धधर्म्माध्यासाच्च बिभ्य-
20 द्भिरपि कथमेकं चित्रपटी[4] ज्ञानमेकानेकाकारोल्लेखशेखरमभ्युपगम्यते सौगतैः, चित्रं वा रूपं नैयायिकादिभिरिति?।

§ १०७ नैयायिकास्तु–"**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्**" [न्या० १.१.४.] इति प्रत्यक्षलक्षणमाचक्षते। अत्र च पूर्वाचार्यकृतव्याख्यावैमुख्येन सङ्ख्यावद्भिस्त्रिलोचनवाचस्पतिप्रमुखैरयमर्थः समर्थि-
25 तो यथा–इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारि प्रत्यक्षमित्येवं[5] प्रत्यक्षलक्षणम्। 'यतः'-शब्दाध्याहारेण च यत्तदोर्नित्याभिसम्बन्धादुक्तविशेषणविशिष्टं ज्ञानं यतो भवति तत् तथाविधज्ञानसाधनं ज्ञानरूपमज्ञानरूपं वा प्रत्यक्षं प्रमाणमिति। अस्य च फलभूतस्य ज्ञानस्य द्वयी गतिरविकल्पं[6] सविकल्पं[7] च। तयोरुभयोरपि प्रमाणरूपत्वमभिधातुं विभागवचनमेतद् 'अव्यपदेश्यं व्यवसायात्मकम्' इति।

30 § १०८. तत्रोभयरूपस्यापि ज्ञानस्य प्रामाण्यमुपेक्ष्य 'यतः'शब्दाध्याहारक्लेशेनाऽज्ञानरूपस्य सन्निकर्षादेः प्रामाण्यसमर्थनमयुक्तम्। कथं ह्यज्ञानरूपाः सन्निकर्षादयोऽर्थपरि-

---

१ वैशेषिकाः। २ धारणा तस्स-विशेषा०। ३ –०दविच्युतिविर०–डे०। ४ –०टीयं ज्ञान०–डे०। ५ –०त्येवं प्र०–डे। ६ –०ल्पकं स०–डे। ७ –०ल्पकं वा। तयो० –डे०।

च्छित्तौ साधकतमा भवन्ति व्यभिचारात्?, सत्यपीन्द्रियार्थसन्निकर्षेऽर्थोपलब्धेरभावात् । ज्ञाने सत्येव भावात्, साधकतमं हि करणमव्यवहितफलं च तदिति ।

§ १०९. सन्निकर्षोऽपि यदि योग्यतातिरिक्तः संयोगादिसम्बन्धस्तर्हि स चक्षुषोऽर्थेन सह नास्ति अप्राप्यकारित्वात्तस्य । दृश्यते हि काचाभ्रस्फटिकादिव्यवहितस्याप्यर्थस्य चक्षुषोपलब्धिः । अथ प्राप्यकारि चक्षुः करणत्वाद्वास्यादिवदिति ब्रूषे; तर्ह्ययस्कान्ताकर्षणोपलेन लोहासन्निकृष्टेन व्यभिचारः । न च संयुक्तसंयोगादिः सन्निकर्षस्तत्र कल्पयितुं शक्यते, अतिप्रसङ्गादिति ।

§ ११०. सौगतास्तु "प्रत्यक्षं कल्पनापोढमभ्रान्तम्" [ न्यायबि० १.४ ] इति लक्षणमवोचन् । "अभिलापसंसर्गयोग्यप्रतिभासा प्रतीतिः कल्पना तया रहितम्" – [ न्यायबि० १.५,६ ] कल्पनापोढम् इति । एतच्च व्यवहारानुपयोगित्वात्प्रमाणस्य लक्षणमनुपपन्नम्, तथाहि एतस्माद्विनिश्चित्यार्थमर्थक्रियार्थिनस्तत्समर्थेऽर्थे प्रवर्तमाना विसंवादभाजो मा भूवन्निति प्रमाणस्य लक्षणपरीक्षायां प्रवर्तन्ते परीक्षकाः । व्यवहारानुपयोगिनश्च तस्य वायससदसद्दशनपरीक्षायामिव निष्फलः परिश्रमः । निर्विकल्पोत्तरकालभाविनः सविकल्पकात्तु व्यहारोपगमे वरं तस्यैव प्रामाण्यमास्थेयम्, किमविकल्पकेन शिखण्डिनेति ? ।

§ १११. जैमिनीयास्तु धर्मं प्रति अनिमित्तत्वव्याजेन "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्" [ जैमि० १.१.४ ] इत्यनुवादभङ्ग्या प्रत्यक्षलक्षणमाचक्षते, यदाहुः–

"एवं सत्यनुवादित्वं लक्षणस्यापि सम्भवेत् ।" [श्लोकवा० सू० ४.३९]

इति । व्याचक्षते च–इन्द्रियाणां सम्प्रयोगे सति पुरुषस्य जायमाना बुद्धिः प्रत्यक्षमिति ।

§ ११२. अत्र संशयविपर्ययबुद्धिजन्मनोऽपीन्द्रियसंप्रयोगे सति प्रत्यक्षत्वप्रसङ्गादतिव्याप्तिः । अथ 'सत्सम्प्रयोग' इति सता सम्प्रयोग इति व्याख्यायते तर्हि निरालम्बनविभ्रमा एवार्थनिरपेक्षजन्मानो निरस्ता भवेयुर्न सालम्बनौ संशयविपर्ययौ । अथ सति सम्प्रयोग इति सत्सप्तमी पक्ष एव न त्यज्यते संशयविपर्ययनिरासाय च 'सम्प्रयोग' इत्यत्र 'सम्' इत्युपसर्गो वर्ण्यते, यदाह–

"सम्यगर्थे च संशब्दो दुष्प्रयोगनिवारणः ।
दुष्टत्वाच्छुक्तिकायोगो वार्यते रजतेक्षणात्" [श्लोकवा०सू० ४. ३८–९]

१ काचाभ्रपटलस्फ०-डे० । २ -०स्यार्थस्य-डे० । ३ –०न्निकर्षेण व्य०–ता० । ४ –०गादिसन्नि० –डे० ।
५ रहितम् तथापोढम्–डे० । रहितम् तयापोढम् –मु० । ६ वायससदसन(वायसदशन)परी० –ता० ।

७ एतत्समानम्–काकस्य कति वा दन्ता मेषस्याण्डं कियत्पलम् ।
गर्दभे कति रोमाणीत्येषा मूर्खविचारणा ॥ –मु-टि०

८ शिखण्डिन्–स्वयंवरे वृतेन भीष्मेणापाकृता काचिदम्बानाम्नी राजकन्या तपसा पुरुषत्वं प्राप्ता । सैव शिखण्डीति सञ्ज्ञया व्यवजह्रे । स च स्त्रीपूर्वत्वान्निन्दास्पदम् । ततो भारते युद्धे तं पुरस्कृत्यार्जुनो भीष्मं जघान । सोऽपि च शिखण्डी पश्चादश्वत्थाम्ना हतः । –मु-टि० । ९ –०वादत्वं–मु० । १० –०संयोगे–डे० ।

इति; तथापि प्रयोगसम्यक्त्वस्यातीन्द्रियत्वेन प्रत्यक्षानवगम्यत्वात्कार्यतोऽवगतिर्वक्तव्या। कार्यं च ज्ञानम् न च तदविशेषितमेव प्रयोगसम्यक्त्वावगमनायालम् । न च तद्विशेषणपरमपरमिह पदमस्ति । सतां सम्प्रयोगइति च वरं निरालम्बनविज्ञाननिवृत्तये, 'सति'इति तु सप्तम्यैव गतार्थत्वादनर्थकम् ।

5 § ११३. येऽपि "**तत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म सत्प्रत्यक्षं यद्विषयं ज्ञानं तेन[2] सम्प्रयोगे इन्द्रियाणां पुरुषस्य बुद्धिजन्म सत्प्रत्यक्षं यदन्यविषयंज्ञानमन्यसम्प्रयोगे भवति न तत्प्रत्यक्षम्** ।" [ शाबरभा० १.१.५ ] इत्येवं त[3]त्सतोर्व्यत्ययेन लक्षणमनवद्यमित्याहुः, तेषामपि क्लिष्टकल्पनैव, संशयज्ञानेन व्यभिचारानिवृत्तेः । तत्र हि यद्विषयं ज्ञानं तेन सम्प्रयोग इन्द्रियाणामस्त्येव । यद्यपि चोभ-
10 यविषयं संशयज्ञानं तथापि तयोरन्यतरेणेन्द्रियं संयुक्तमेव उभयात्ममर्शित्वाच्च संशयस्य येन संयुक्तं चक्षुस्तद्विषयमपि तज्ज्ञानं भवत्येवेति नातिव्याप्तिपरिहारः । अव्याप्तिश्च चाक्षुषज्ञानस्येन्द्रियसम्प्रयोगजत्वाभावात् । अप्राप्यकारि च चक्षुरित्युक्तप्रायम् ।

§ ११४. "**श्रोत्रादिवृत्तिरविकल्पिका प्रत्यक्षम्**" इति वृद्धसाङ्ख्याः । अत्र श्रोत्रादीनामचेतनत्वात्तद्वृत्तेः सुतरामचैतन्यमिति कथं प्रमाणत्वम्? । चेतनसंसर्गात्तच्चैत-
15 न्याभ्युपगमे वरं चित एव प्रामाण्यमभ्युपगन्तुं युक्तम् । न चाविकल्पकत्वे प्रामाण्यमस्तीति यत्किञ्चिदेतत् ।

§ ११५. "**प्रतिविषयाध्यवसायो दृष्टम्**"[5] [सां०का०५] इति प्रत्यक्षलक्षणमितीश्वरकृष्णः । तदप्यनुमानेन व्यभिचारित्वादलक्षणम् । अथ 'प्रतिः' आभिमुख्ये वर्तते तेनाभिमुख्येन विषयाध्यवसायः प्रत्यक्षमित्युच्यते; तदप्यनुमानेन तुल्यम् घटोऽयमितिवदयं
20 पर्वतोऽग्निमानित्याभिमुख्येन प्रतीतेः । अथ अनुमानादिविलक्षणो अभिमुखोऽध्यवसायः प्रत्यक्षम्; तर्हि प्रत्यक्षलक्षणमकरणीयमेव शब्दानुमानलक्षणविलक्षणतयैव तत्सिद्धेः ।

§ ११६. ततश्च परकीयलक्षणानां दुष्टत्वादिदमेव 'विशदः प्रत्यक्षम्' इति प्रत्यक्षलक्षणमनवद्यम् ॥ २९ ॥

§ ११७. प्रमाणविषयफलप्रमातृरूपेषु चतुर्षु विधिषु[6] तत्त्वं परिसमाप्यत इति विषया-
25 दिलक्षणमन्तरेण प्रमाणलक्षणमसम्पूर्णमिति विषयं लक्षयति–

**प्रमाणस्य विषयो द्रव्यपर्यायात्मकं वस्तु ॥ ३० ॥**

§ ११८. प्रत्यक्षस्य प्रकृतत्वात्तस्यैव विषयादौ लक्षयितव्ये 'प्रमाणस्य' इति प्रमाणसामान्यग्रहणं प्रत्यक्षवत् प्रमाणान्तराणामपि विषयादिलक्षणमिहैव वक्तुं युक्तमविशेषात्तथा च लाघवमपि भवतीत्येवमर्थम्[7] । जातिनिर्देशाच्च प्रमाणानां प्रत्यक्षादीनां 'विषयः' गोचरो 'द्रव्यपर्यायात्मकं वस्तु' । द्रवति तांस्तान् पर्यायान् गच्छति इति द्रव्यं ध्रौव्यलक्षणम् ।

---

१ सता सम्प्र–ता० डे० । २ तेनैव सम्प्र० –मु-पा० । ३ तत्सर्वेतोव्य०–डे० । ४ –०कल्पत्वे–डे० । ५ दृष्टमति प्रत्य०–ता० । ६ विधेषु इत्यपि पठितुं शक्यं ता० प्रतौ । ७ –०मर्थजाति०–डे० ।

पूर्वोत्तरविवर्तवर्त्यन्वयप्रत्ययसमधिगम्यमूर्ध्वतासामान्यमिति यावत् । परियन्त्युत्पाद-विनाशधर्म्माणो भवन्तीति पर्याया विवर्त्ताः। तच्च ते चात्मा स्वरूपं यस्य तत् द्रव्य-पर्यायात्मकं वस्तु, परमार्थसदित्यर्थः, यद्वाचकमुख्यः-"**उत्पादव्ययध्रौव्ययुक्तं सद्**" [तत्त्वा० ५.२९] इति, पारमर्षमपि "**उपन्नेइ वा विगमेइ वा धुवेइ वा**" इति।

§ ११९. तत्र 'द्रव्यपर्याय'ग्रहणेन द्रव्यैकान्तपर्यायैकान्तवादिपरिकल्पितविषयव्यु-दासः। 'आत्म'ग्रहणेन चात्यन्तव्यतिरिक्तद्रव्यपर्यायवादिकाणादयौगाभ्युपगतविषय-निरासः। यच्छ्रीसिद्धसेनः- 5

"**दोहिं वि नएहिं नीयं सत्थमुलूएण तहवि मिच्छत्तं।**
**जं सविसयप्पहाणत्तणेण अन्नोन्ननिरविक्खा**" ॥ [सन्म० ३. ४९] त्ति ॥३०॥

§ १२०. कुतः पुनर्द्रव्यपर्यायात्मकमेव वस्तु प्रमाणानां विषयो न द्रव्यमात्रं पर्याय-मात्रमुभयं वा स्वतन्त्रम्? इत्याह- 10

## अर्थक्रियासामर्थ्यात् ॥ ३१ ॥

§ १२१. 'अर्थस्य' हानोपादानादिलक्षणस्य 'क्रिया' निष्पत्तिस्तत्र 'सामर्थ्यात्', द्रव्य-पर्यायात्मकस्यैव वस्तुनोऽर्थक्रियासमर्थत्वादित्यर्थः ॥ ३१ ॥

§ १२२. यदि नामैवं ततः किमित्याह- 15

## तल्लक्षणत्वाद्वस्तुनः ॥ ३२ ॥

§ १२३. 'तद्' अर्थक्रियासामर्थ्यं 'लक्षणम्' असाधारणं रूपं यस्य तत् तल्लक्षणं तस्य भावस्तत्त्वं तस्मात्। कस्य?। 'वस्तुनः' परमार्थसतो रूपस्य। अयमर्थः-अर्थक्रियार्थी हि सर्वः प्रमाणमन्वेषते, अपि नामेतः प्रमेयमर्थक्रियाक्षमं विनिश्चित्य कृतार्थो भवेयमिति न व्यसनितया। तद्यदि प्रमाणविषयोऽर्थोऽर्थक्रियाक्षमो न भवेत्तदा नासौ प्रमाणपरीक्षण-मादियेत। यदाह- 20

"**अर्थक्रियाऽसमर्थस्य विचारैः किं तदर्थिनाम्।**
**षण्ढस्य रूपवैरूप्ये कामिन्याः किं परीक्षया?**॥" [प्रमाणवा० १.२१५] इति।

§ १२४. तत्र न द्रव्यैकरूपोऽर्थोऽर्थक्रियाकारी, स ह्यप्रच्युतानुत्पन्नस्थिरैकरूपः कथमर्थ-क्रियां कुर्वीत क्रमेणाक्रमेण वा?, अन्योन्यव्यवच्छेदरूपाणां प्रकारान्तरासम्भवात्। तत्र न क्रमेण; स हि कालान्तरभाविनीः क्रियाः प्रथमक्रियाकाल एव प्रसह्य कुर्यात् समर्थस्य कालक्षेपायोगात्, कालक्षेपिणो वाऽसामर्थ्यप्राप्तेः। समर्थोऽपि तत्तत्सहकारिसमवधाने तं तमर्थं करोतीति चेत्; न तर्हि तस्य सामर्थ्यमपरसहकारिसापेक्षवृत्तित्वात्, "**सापेक्षम-समर्थम्**" [पात० महा० ३.१,८] इति हि किं नाश्रौषीः?। न तेन सहकारिणोऽपेक्ष्यन्तेऽपि तु 25

१ ध्रौव्याणां योगः। २ अन्ननिर०-मु०। अणुण्णनिर०-डे०। ३ निरपेक्षौ नयौ। ४ एकत्रिंशत्तमं द्वात्रिंशत्तमं च सूत्रद्वयं सं-मू० प्रतौ भेदकचिह्नं विना सहैव लिखितं दृश्यते -सम्पा०। ५ -०क्रियार्थसम०-डे०। ६ -०त्वाद्वा वस्तुनः-सं-मू०। ७ प्रमाणान्वेषणभावनायाम्। ८ यदाहुः-ता०। ९ सामर्थ्यं पर०-ता०।

कार्यमेव सहकारिष्वसत्स्वभवत् तानपेक्षत इति चेत्; तत्किं स भावोऽसमर्थः ?। समर्थश्चेत्; किं सहकारिमुखप्रेक्षणदीनानि तान्युपेक्षते न पुनर्झटिति घटयति ?। ननु समर्थमपि बीज-मिलाजलादिसहकारिसहितमेवाङ्कुरं करोति नान्यथा; तत् किं तस्य सहकारिभिः किञ्चिदुप-क्रियेत, न वा ?। नो चेत्; स किं पूर्ववन्नोदास्ते। उपक्रियेत चेत्; स तर्हि तैरुपकारो
5 भिन्नोऽभिन्नो वा क्रियते[3] इति निर्वचनीयम्। अभेदे स एव क्रियते इति लाभमिच्छतो मूलक्षतिरायाता। भेदे स कथं तस्योपकारः ?, किं न सह्यविन्ध्यादेरपि ?। तत्सम्बन्धात्त-स्यायमिति चेत्; उपकार्योपकारयोः कः सम्बन्धः ?। न संयोगः; द्रव्ययोरेव तस्य भावात्। नापि समवायस्तस्य प्रत्यासत्तिविप्रकर्षाभावेन सर्वत्र तुल्यत्वान्न नियतस-म्बन्धिसम्बन्धत्वंयुक्तम्, तत्त्वे वा तत्कृत उपकारोऽस्याभ्युपगन्तव्यः, तथा च सत्यु-
10 पकारस्य भेदाभेदकल्पना तदवस्थैव। उपकारस्य समवायादभेदे समवाय एव कृतः स्यात्। भेदे पुनरपि समवायस्य न नियतसम्बन्धिसम्बन्धत्वम्। नियतसम्बन्धिसम्ब न्धत्वे समवायस्य विशेषणविशेष्यभावो हेतुरिति चेत्; उपकार्योपकारकभावाभावे तस्यापि प्रतिनियमहेतुत्वाभावात्। उपकारे तु पुनर्भेदाभेदविकल्पद्वारेण तदेवावर्तते। तन्नैकान्तनित्यो भावः क्रमेणार्थक्रियां कुरुते।

15 § १२५. नाप्यक्रमेण। न ह्येको भावः सकलकालकलाभाविनीर्युगपत् सर्वाः क्रियाः करोतीति प्रातीतिकम्। कुरुतां वा, तथापि द्वितीयक्षणे किं कुर्यात् ?। करणे वा क्रमपक्ष-भावी दोषः। अकरणेऽनर्थक्रियाकारित्वादवस्तुत्वप्रसङ्गः – इत्येकान्तनित्यात् क्रमा-क्रमाभ्यां व्याप्तार्थक्रिया व्यापकानुपलब्धिबलात् व्यापकनिवृत्तौ निवर्तमाना व्याप्यमर्थ-क्रियाकारित्वं निवर्तयति तदपि स्वव्याप्यं सत्त्वमित्यसन् द्रव्यैकान्तः।

20 § १२६. पर्यायैकान्तरूपोऽपि प्रतिक्षणविनाशी भावो न क्रमेणार्थक्रियासमर्थो देशकृतस्य कालकृतस्य च क्रमस्यैवाभावात्। अवस्थितस्यैव हि नानादेशकालव्याप्ति-र्देशक्रमः कालक्रमश्चाभिधीयते। न चैकान्तविनाशिनि सास्ति। यदाहुः–

"यो यत्रैव स तत्रैव यो यदैव तदैव सः।
न देशकालयोर्व्याप्तिर्भावानामिह विद्यते ॥"

25 § १२७. न च सन्तानापेक्षया पूर्वोत्तरक्षणानां क्रमः सम्भवति, सन्तानस्याऽवस्तु-त्वात्। वस्तुत्वेऽपि तस्य यदि क्षणिकत्वं न तर्हि क्षणेभ्यः कश्चिद्विशेषः। अथाक्षणिकत्वम्; सुस्थितः पर्यायैकान्तवादः ! यदाहुः–

---

१ कार्याणि। २ बीजमिलादि०-डे०। ३ क्रियेत इति-डे०। ४ -०न्ध्यादेर०-डे०। ५ नियतसम्ब-न्धिकृतः। ६ समवायस्य। ७ ०-त्वम् सम्बन्धत्वे -डे०। ८ नियतसम्बन्धिनोर्बीजोपकारयोः सम्बन्धत्वे-ऽनयोः समवाय इति विशेषणविशेष्यभावः। ९ कलाशब्देनांशाः। १० स हि कालान्तरभाविनीः क्रिया इत्यादिको ग्रन्थ आवर्तनीयः। ११ तदप्यर्थक्रियाकारित्वं व्यापकं निवर्तमानं स्वव्याप्यं सत्त्वं निवर्तयति। १२ कर्तरि षष्ठी। १३ पर्यायैकान्तवादे। १४ -०त्वं न सु०-डे०। १५ यदुक्तम्-डे०।

"अथापि नित्यं परमार्थसन्तं सन्ताननामानमुपैषि भावम् ।
उत्तिष्ठ भिक्षो ! फलितास्तवाशाः सोऽयं समासः क्षणभङ्गवादः ॥"
[ न्यायम० पृ० ४६४ ] इति ।

§ १२८. नाप्यक्रमेण क्षणिकेऽर्थक्रिया सम्भवति । स ह्येको रूपादिक्षणो युगपदनेकान्[1] रसादिक्षणान् जनयन् यद्येकेन स्वभावेन जनयेत्तदा तेषामेकत्वं स्यादेकस्वभावजन्यत्वात् । 5
अथ नानास्वभावैर्जनयति – किञ्चिदुपादानभावेन किञ्चित् सहकारित्वेन; ते तर्हि स्वभावास्तस्यात्मभूता अनात्मभूता वा ? । अनात्मभूताश्चेत्; स्वभावहानिः । यदि तस्यात्मभूताः; तर्हि तस्यानेकत्वं स्वभावानां चैकत्वं प्रसज्येत । अथ य एवैकत्रोपादानभावः स एवान्यत्र सहकारिभाव इति न स्वभावभेद इष्यते; तर्हि नित्यस्यैकरूपस्यापि क्रमेण नानाकार्यकारिणः स्वभावभेदः कार्यसाङ्कर्यं च मा भूत् । अथाक्रमात् क्रमिणामनुत्पत्तेर्नैवमिति चेत्; एकानंश- 10
कारणात् युगपदनेककारणसाध्यानेककार्यविरोधात् क्षणिकानामप्यक्रमेण कार्यकारित्वं मा भूदिति पर्यायैकान्तादपि क्रमाक्रमयोर्व्यापकयोर्निवृत्त्यैव व्याप्याऽर्थक्रियापि व्यावर्तते । तद्व्यावृत्तौ च सत्त्वमपि व्यापकानुपलब्धिबलेनैव निवर्तत इत्यसन् पर्यायैकान्तोऽपि ।

§ १२९. काणादास्तु द्रव्यपर्यायावुभावप्युपागमन् पृथिव्यादीनि गुणाद्याधाररूपाणि द्रव्याणि, गुणादयस्त्वाधेयत्वात्पर्यायाः । ते च केचित् क्षणिकाः, केचिद्यावद्द्रव्य- 15
भाविनः, केचिन्नित्या इति केवलमितरेतरविनिर्लुठितधर्मिधर्माभ्युपगमान्न समीचीनविषयवादिनः । तथाहि—यदि द्रव्यादत्यन्तविलक्षणं सत्त्वं तदा द्रव्यमसदेव भवेत् । सत्तायोगात् सत्त्वमस्त्येवेति चेत्; असतां सत्तायोगेऽपि कुतः सत्त्वम् ?, सतां तु निष्फलः सत्तायोगः । स्वरूपसत्त्वं भावानामस्त्येवेति चेत्; तर्हि किं शिखण्डिना सत्तायोगेन ? । सत्तायोगात् प्राक् भावो न सन्नाप्यसन्, सत्तासम्बन्धात्तु सन्निति चेत्; वाङ्मात्रमेतत्, सदस- 20
द्विलक्षणस्य प्रकारान्तरस्यासम्भवात् । अपि च 'पदार्थः[12] सत्ता योगः' इति न त्रितयं चकास्ति । पदार्थसत्तयोश्च योगो यदि तादात्म्यम्, तदनभ्युपगमबाधितम् । अत[13] एव न संयोगः[14], समवायस्त्वनाश्रित इति सर्वं सर्वेण सम्बध्नीयान्न वा किञ्चित् केनचित् । एवं द्रव्यगुणकर्मणां द्रव्यत्वादिभिः[15], द्रव्यस्य द्रव्यगुणकर्मसामान्यविशेषैः, पृथिव्यप्तेजोवायूनां पृथिवीत्वादिभिः, आकाशादीनां च द्रव्याणां स्वगुणैर्योगे यथायोगं 25
सर्वमभिधानीयम्, एकान्तभिन्नानां केनचित्[16] कथञ्चित् सम्बन्धायोगात् इत्यौलूक्यपक्षेऽपि विषयव्यवस्था दुःस्था ।

---

१ –०ता तवा०–डे० । २ बीजपूरादौ । ३ युगपदेकान्–ता० । ४ नित्यस्यैकरूपस्यापि क्रमेणेत्यादिको ग्रन्थो न घटते । ५ न हि एकांश उपादानस्वरूपोऽन्यश्च सहकारिस्वरूपो भवन्मतेऽस्ति । ६ –०मेणाकारि० –डे० । ७ –०वुभावप्यभ्युपा०–डे० । ८ बुद्ध्यादयः । ९ घटरूपादयः । १० आप्यरूप्या(पा)दयः [ जलादिपरमाणुरूपादीनां नित्यत्वात् ] । ११ –०मिश्र० । १२ पदार्थस० –डे० । १३ अनभ्युपगमबाधितत्वात् एव । १४ संयोगो हि द्रव्ययोरेव । १५ आदेर्गुणत्वकर्मत्वे । १६ केनचित् सम्ब०–ता० मु० ।

§ १३०. ननु द्रव्यपर्यायात्मकत्वेऽपि वस्तुनस्तदवस्थमेव दौस्थ्यम्; तथाहि-द्रव्यपर्याययोरैकान्तिकभेदाभेदपरिहारेण कथञ्चिद्भेदाभेदवादः स्याद्वादिभिरुपेयते, न चासौ युक्तो विरोधादिदोषात्-विधिप्रतिषेधरूपयोरेकत्र वस्तुन्यसम्भवान्नीलानीलवत् १। अथ केनचिद्रूपेण भेदः केनचिदभेदः; एवं सति भेदस्यान्यदधिकरणमभेदस्य चान्यदिति वैयधिकरण्यम् २। यं चात्मानं पुरोधाय भेदो यं चाश्रित्याभेदस्तावप्यात्मानौ भिन्नाभिन्नावन्यथैकान्तवादप्रसक्तिस्तथा च सत्यनवस्था ३। येन च रूपेण भेदस्तेन भेदश्चाभेदश्च येन चाभेदस्तेनाप्यभेदश्च भेदश्चेति सङ्करः ४। येन रूपेण भेदस्तेनाभेदो येनाभेदस्तेन भेद इति व्यतिकरः ५। भेदाभेदात्मकत्वे च वस्तुनो विविक्तेनाकारेण निश्चेतुमशक्तेः संशयः ६। ततश्चाप्रतिपत्तिः ७ इति न विषयव्यवस्था ८। नैवम्; प्रतीयमाने वस्तुनि विरोधस्यासम्भवात्। यत्सन्निधाने यो नोपलभ्यते स तस्य विरोधीति निश्चीयते। उपलभ्यमाने च वस्तुनि को विरोधगन्धावकाशः?। नीलानीलयोरपि यद्येकत्रोपलम्भोऽस्ति तदा नास्ति विरोधः। एकत्र चित्रपटीज्ञाने सौगतैर्नीलानीलयोर्विरोधानभ्युपगमात्, यौगैश्चैकस्य चित्रस्य रूपस्याभ्युपगमात्, एकस्यैव च पटादेश्चलाचलरक्तारक्तावृतानावृतादिविरुद्धधर्माणामुपलब्धेः प्रकृते को विरोधशङ्कावकाशः?। एतेन वैयधिकरण्यदोषोऽप्यपास्तः; तयोरेकाधिकरणत्वेन प्रागुक्तयुक्तिदिशा प्रतीतेः। यदप्यनवस्थानं दूषणमुपन्यस्तम् तदप्यनेकान्तवादिमतानभिज्ञेनैव, तन्मतं हि द्रव्यपर्यायात्मके वस्तुनि द्रव्यपर्यायावेव भेदः भेदध्वनिना तयोरेवाभिधानात्, द्रव्यरूपेणाभेदः इति द्रव्यमेवाभेदः एकानेकात्मकत्वाद्वस्तुनः। यौ च सङ्करव्यतिकरौ तौ मेचकज्ञाननिदर्शनेन सामान्यविशेषदृष्टान्तेन च परिहृतौ। अथ तत्र तथाप्रतिभासः समाधानम्; परस्यापि तदेवास्तु प्रतिभासस्यापक्षपातित्वात्। निर्णीते चार्थे संशयोऽपि न युक्तः, तस्य सकम्पप्रतिपत्तिरूपत्वादकम्पप्रतिपत्तौ दुर्घटत्वात्। प्रतिपन्ने च वस्तुन्यप्रतिपत्तिरिति साहसम्। उपलब्ध्यभिधानादनुपलम्भोऽपि न सिद्धस्ततो नाभाव इति दृष्टेष्टाविरुद्धं द्रव्यपर्यायात्मकं वस्त्विति ॥३२॥

§ १३१. ननु द्रव्यपर्यायात्मकत्वेऽपि वस्तुनः कथमर्थक्रिया नाम?। सा हि क्रमाक्रमाभ्यां व्याप्ता द्रव्यपर्यायैकान्तवदुभयात्मकादपि व्यावर्तताम्। शक्यं हि वक्तुमुभयात्मा भावो न क्रमेणार्थक्रियां कर्तुं समर्थः, समर्थस्य क्षेपायोगात्। न च सहकार्यपेक्षा युक्ता, द्रव्यस्याविकार्यत्वेन सहकारिकृतोपकारनिरपेक्षत्वात्। पर्यायाणां च क्षणिकत्वेन पूर्वापरकार्यकालाप्रतीक्षणात्। नाप्यक्रमेण, युगपद्धि सर्वकार्याणि कृत्वा पुनरकुर्वतोऽनर्थ-

---

१ भेदाभेदरूपयोः। २ स्वभावम्। ३ युगपदुभयप्राप्तिः सङ्करः। ४ परस्परविषयगमनं व्यतिकरः। ५ छायेवातपस्य। ६ परोक्तदृष्टान्ते दूषयन्नाह। ७ योगः प्रत्याहारादिस्तं वेत्त्यधीते वा यौगः "तद्वेत्त्यधीते" [ हैमश० ६. २. ११७ ] इत्यण्। ८ चित्ररूपस्य एकस्याऽवयविताऽभ्युपगमात्। ९ एकस्यैव पटा० -डे०। १० विज्ञानस्यैकमाकारं नानाकारकरम्बितम्। ११ द्रव्यपर्यायात्मा। १२ प्रथमद्वितीयकाय(र्य)योः कालः।

क्रियाकारित्वादसत्त्वम्, कुर्वतः क्रमपक्षभावी दोषः । द्रव्यपर्यायवादयोश्च यो दोषः स उभयवादेऽपि समानः—

"प्रत्येकं यो भवेद्दोषो द्वयोर्भावे कथं न सः ?"

इति वचनादित्याह—

**पूर्वोत्तराकारपरिहारस्वीकारस्थितिलक्षणपरिणामे-[1] नास्यार्थ[2]क्रियोपपत्तिः ॥ ३३ ॥**　5

§ १३२. 'पूर्वोत्तरयोः' 'आकारयोः' विवर्तयोर्यथासङ्ख्येन यौ 'परिहारस्वीकारौ' ताभ्यां स्थितिः सैव 'लक्षणम्' यस्य स चासौ परिणामश्च, तेन 'अस्य' द्रव्यपर्यायात्मकस्यार्थ-क्रियोपपद्यते ।

§ १३३. अयमर्थः—न द्रव्यरूपं न पर्यायरूपं नोभय[3]रूपं वस्तु, येन तत्तत्पक्षभावी दोषः स्यात्, किन्तु स्थित्युत्पादव्ययात्मकं शबलं जात्यन्तरमेव वस्तु । तेन तत्तत्सहकारि-सन्निधाने क्रमेण युगपद्वा तां तामर्थक्रियां कुर्वतः सहकारिकृतां चोपकारपरम्परामुप-जीवतो भिन्नाभिन्नोपकारा[4]दिनोदनानुमोदनाप्रमुदितात्मनः उभयपक्षभाविदोषशङ्काकल-ङ्काऽकान्दिशीक[5]स्य भावस्य न व्यापका[6]नुपलब्धिबलेनार्थक्रियायाः, नापि तद्व्याप्य[7]-सत्त्वस्य निवृत्तिरिति सिद्धं द्रव्यपर्यायात्मकं वस्तु प्रमाणस्य विषयः ॥३३॥　10　15

§ १३४. फलमाह—

**फलमर्थप्रकाशः ॥३४॥**

§ १३५. 'प्रमाणस्य' इति वर्तते, प्रमाणस्य 'फलम्' 'अर्थप्रकाशः' अर्थसंवेदनम् ; अर्था[8]र्थी हि सर्वः प्रमातेत्यर्थसंवेदनमेव फलं युक्तम् । नन्वेवं प्रमाणमेव फलत्वेनोक्तं स्यात्, ओमिति चेत्, तर्हि प्रमाणफलयोरभेदः स्यात् । ततः किं स्यात् ? । प्रमाणफलयोरैक्ये सदसत्पक्षभावी दोषः स्यात्, नासतः करणत्वं न सतः फलत्वम् । सत्यम्, अस्त्ययं दोषो जन्मनि न व्यवस्थायाम् । यदाहुः—　20

"नासतो हेतुता नापि सतो हेतो[9][10]ः फलात्मता ।
इति जन्मनि दोषः स्याद् व्यवस्था तु न दोषभाग् ॥" इति ॥३४॥

§ १३६. व्यवस्थामेव दर्शयति—　25

**कर्म[11]स्था क्रिया ॥३५॥**

§ १३७. कर्मोन्मुखो ज्ञानव्यापारः फलम् ॥३५॥

---

१ —०क्षणेन परि० —सं—मू० । २ —०नास्य क्रियो० —सं—मू० । ३ स्वतन्त्रद्रव्यपर्यायरूपम् । ४ आदेरुप-कार्युपकारयोः सम्बन्धः । ५ "कान्दिशीको भयद्रुते"—अभि० चि० ३.३० । ६ क्रमाक्रमौ व्यापकौ तयोः । ७ —०प्यस्य सत्त्व०—डे० । ८ अर्थक्रियाक्षमं वस्तु अत्रार्थशब्देनोच्यते । ९ अविद्यमान-प्रमाणस्य । १० फलात् प्रमाणस्याभेदो भवन्मते । ततश्च फलस्य साध्यत्वेनासत्त्वात् प्रमाणस्याप्यसत्त्वप्रसङ्गः । असच्च न करणं भवति सिद्धस्यैवाङ्गीकारात् । तथा, प्रमाणात् फलस्य यद्यभेदः तदा प्रमाणस्य सत्त्वात् फल-मपि सदेव स्याद्विद्यमानस्य च [न] फलत्वं साध्यस्यैव फलत्वाभ्युपगमात् । ११ पञ्चत्रिंशत्तमं षट्त्रिंशत्तमं च सूत्र-द्वयं ता—मू० प्रतौ भेदकचिह्नं विना सहैव लिखितं दृश्यते—सम्पा० ।

§ १३८. प्रमाणं किमित्याह–

**कर्तृस्था¹ प्रमाणम् ॥३६॥**

§ १३९. कर्तृव्यापारमुल्लिखन्² बोधः प्रमाणम् ॥३६॥

§ १४०. कथमस्य प्रमाणत्वम् ? । करणं हि तत् साधकतमं च करणमुच्यते।
5 अव्यवहितफलं च³ तदित्याह–

**तस्यां सत्यामर्थप्रकाशसिद्धेः ॥३७॥**

§ १४१. 'तस्याम्' इति कर्तृस्थायां प्रमाणरूपायां क्रियायां 'सत्याम्' 'अर्थप्रकाशस्य' फलस्य 'सिद्धेः' व्यवस्थापनात् । एकज्ञानगतत्वेन प्रमाणफलयोरभेदो, व्यवस्थाप्यव्यवस्थापकभावात्तु भेद इति भेदाभेदरूपः स्याद्वादमबाधितमनुपतति प्रमाणफलभाव
10 इतीदमखिलप्रमाणसाधारणमव्यवहितं फलमुक्तम् ॥ ३७ ॥

§ १४२. अव्यवहितमेव फलान्तरमाह–

**अज्ञाननिवृत्तिर्वा ॥३८॥**

§ १४३. प्रमाणप्रवृत्तेः पूर्वं प्रमातुर्विवक्षिते विषये यत् 'अज्ञानम्' तस्य 'निवृत्तिः'⁴ फलमित्यन्ये । यदाहुः–

15 **"प्रमाणस्य फलं साक्षा⁵दज्ञानविनिवर्तनम् ।**
**केवलस्य सुखोपेक्षे शेषस्यादानहानधीः ॥"** [न्याया० २८] इति ॥३८॥

§ १४४. व्यवहितमाह–

**अवग्रहादीनां वा क्रमोपजनधर्माणां⁶ पूर्वं पूर्वं प्रमाणमुत्तरमुत्तरं फलम्⁷ ॥३९॥⁸**

20 § १४५. अवग्रहेहावायधारणास्मृतिप्रत्यभिज्ञानोहानुमानानां क्रमेणोपजायमानानां यद्यत् पूर्वं तत्तत्प्रमाणं यद्यदुत्तरं तत्तत्फलरूपं प्रतिपत्तव्यम् । अवग्रहपरिणामवान् ह्यात्मा ईहारूपफलतया परिणमति इतीहाफलापेक्षया अवग्रहः प्रमाणम् । ततोऽपीहा प्रमाणमवायः फलम् । पुनरवायः प्रमाणं धारणा फलम् । ईहाधारणयोर्ज्ञानोपादानत्वात्⁹ ज्ञानरूपतोन्नेया । ततो धारणा प्रमाणं स्मृतिः फलम् । ततोऽपि स्मृतिः प्रमाणं प्रत्यभिज्ञानं फलम् ।

---

१ कर्मस्था प्र० – ता–मू० । २ तथाहि कर्मस्था कर्तृस्था चेत् ( स्था च ) क्रिया प्रतीयते तथा (?) ज्ञानस्यापि । त(य)थाहि वह्निगता तावत् काचिद्दाहिका शक्तिरभ्युपेया यद्व्यापारात् काष्ठानि दग्धानि भवन्ति तथा काष्ठगता दाहक्रिया काचिदस्ति यस्यास्तानि भस्मीभवन्ति । एवमन्यत्रापि ज्ञानार्थयोर्भावनीयम् । ३ –०फलं तदि०–डे० । ४ वस्तुत ऐक्येऽपि ज्ञानोन्मुखोऽर्थप्रकाशः अर्थोन्मुखी अज्ञाननिवृत्तिः इति भेदः । ५ अव्यवहितम् । ६ –०पजननधर्मा०–सं–मू० । ७ –०धर्मणाम्–ता० । ८ एकोनचत्वारिंशत्तमं चत्वारिंशत्तमं च सूत्रद्वयं ता– मू०. प्रतौ भेदकचिह्नं विना सहैव लिखितं दृश्यते–सम्पा० । ९ ईहायाश्चेष्टारूपत्वात् धारणायाश्च संस्काररूपत्वात् अज्ञानत्वमिति परस्य अभिसन्धिः । १० ज्ञानमुपादानं ययोर्ज्ञानस्योपादनं वा ।

ततोऽपि प्रत्यभिज्ञा प्रमाणमूहः फलम् । ततोऽप्यूहः प्रमाणमनुमानं फलमिति प्रमाणफलविभाग इति ॥ ३९ ॥

§ १४६. फलान्तरमाह–

## हानादिबुद्धयो वा ॥४०॥

§ १४७. हानोपादानोपेक्षाबुद्धयो वा प्रमाणस्य फलम् । फलबहुत्वप्रतिपादनं सर्वेषां फलत्वेन न विरोधो वैवक्षिकत्वात् फलस्येति प्रदिपादनार्थम् ॥ ४० ॥ 5

§ १४८. एकान्तभिन्नाभिन्नफलवादिमतपरीक्षार्थमाह–

## प्रमाणाद्भिन्नाभिन्नम् ॥४१॥

§ १४९. करणरूपत्वात् क्रियारूपत्वाच्च प्रमाणफलयोर्भेदः । अभेदे प्रमाणफलभेदव्यवहारानुपपत्तेः प्रमाणमेव वा फलमेव वा भवेत् । अप्रमाणाद्व्यावृत्त्या प्रमाणव्यवहारः, 10 अफलाद्व्यावृत्त्या च फलव्यवहारो भविष्यतीति चेत्; नैवम्; एवं सति प्रमाणान्तराद्व्यावृत्त्याऽप्रमाणव्यवहारः, फलान्तराद्व्यावृत्त्याऽफलव्यवहारोऽप्यस्तु, विजातीयादिव सजातीयादपि व्यावृत्तत्वाद्वस्तुनः ।

§ १५०. तथा, तस्यैवात्मनः प्रमाणाकारेण परिणतिस्तस्यैव फलरूपतया परिणाम इत्येकप्रमात्रपेक्षया प्रमाणफलयोरभेदः । भेदे त्वात्मान्तरवत्तदनुपपत्तिः । अथ यत्रैवात्मनि 15 प्रमाणं समवेतं फलमपि तत्रैव समवेतमिति समवायलक्षणया प्रत्यासत्त्या प्रमाणफलव्यवस्थितिरिति नात्मान्तरे तत्प्रसङ्ग इति चेत्; न; समवायस्य नित्यत्वाद्व्यापकत्वान्नियतात्मवत्सर्वात्मस्वप्यविशेषान्न ततो नियतप्रमातृसम्बन्धप्रतिनियमः तत् सिद्धमेतत् प्रमाणात्फलं कथञ्चिद्भिन्नमभिन्नं चेति ॥ ४१ ॥

§ १५१. प्रमातारं लक्षयति– 20

## स्वपराभासी परिणाम्यात्मा प्रमाता ॥४२॥

§ १५२. स्वम् आत्मानं परं चार्थमाभासयितुं शीलं यस्य स 'स्वपराभासी' स्वोन्मुखतयाऽर्थोन्मुखतया चावभासनात् घटमहं जानामीति कर्मकर्तृक्रियाणां प्रतीतेः, अन्यतरप्रतीत्यपलापे प्रमाणाभावात् । न च परप्रकाशकत्वस्य स्वप्रकाशकत्वेन विरोधः प्रदीपवत् । नहि प्रदीपः स्वप्रकाशे परमपेक्षते । अनेनैकान्तस्वाभासिपराभासिवादिमतनिरासः । 25 स्वपराभास्येव 'आत्मा प्रमाता' ।

---

१ –०पेक्षया बु०–ता० । २ अर्थप्रकाशादीनाम् । ३ –०क्षितत्वात्–ता० । ४ अ[न्य]प्रमाणात् । ५ –०लत्वव्य० –डे० । ६ प्रमाणान्तरात् । ७ यथैकात्मगतस्य प्रमाणस्य सम्बन्धि द्वितीयात्मगतं फलं न भवति तथैकात्मगतयोरपि मा भूदत्यन्तभेदस्योभयपक्षयोरप्यविशिष्टत्वात् । ८ –०तारं कथयति–डे० । ९ एतत्सूत्रानन्तरं ता–मू० प्रतौ एवं लिखितं वर्तते–"इत्याचार्यश्रीहेमचन्द्रविरचितायां प्रमाणमीमांसायां प्रथमस्याध्यायस्य प्रथममाह्निकम् । सं–मू० प्रतौ तु –०ध्यायस्याद्याह्निकम् । १० बौद्धस्य ।

§ १५३. तथा, परिणाम उक्तलक्षणः स विद्यते यस्य स 'परिणामी'। कूटस्थनित्ये ह्यात्मनि हर्षविषादसुखदुःखभोगादयो विवर्ताः प्रवृत्तिनिवृत्तिधर्माणो न वर्तेरन्। एकान्तनाशिनि च कृतनाशाकृताभ्यागमौ स्याताम्, स्मृतिप्रत्यभिज्ञाननिहितप्रत्युन्मार्गणप्रभृतयश्च प्रतिप्राणिप्रतीता व्यवहारा विशीर्येरन्। परिणामिनि तूत्पादव्ययध्रौव्यधर्मण्यात्मनि सर्वमुपपद्यते। यदाहुः–

"यथाहेः कुण्डलावस्था व्यपैति तदनन्तरम्।
सम्भवत्यार्जवावस्था सर्पत्वं त्वनुवर्तते ॥
तथैव नित्यचैतन्यस्वरूपस्यात्मनो हि न।
निःशेषरूपविगमः सर्वस्यानुगमोऽपि वा ॥
किं त्वस्य विनिवर्तन्ते सुखदुःखादिलक्षणाः।
अवस्थास्ताश्च जायन्ते चैतन्यं त्वनुवर्तते ॥
स्यातामत्यन्तनाशे हि कृतनाशाकृतागमौ।
सुखदुःखादिभोगश्च नैव स्यादेकरूपिणः ॥
न च कर्तृत्वभोक्तृत्वे पुंसोऽवस्थां समाश्रिते।
ततो[2]ऽवस्थावत[3]स्तत्त्वात्[4] कर्तैवाप्नोति तत्फलम् ॥" [तत्त्वसं० का० २२३-२२७]

इति अनेनैकान्तनित्यानित्यवादव्युदासः। 'आत्मा' इत्यनात्मवादिनो व्युदस्यति। कायप्रमाणता त्वात्मनः प्रकृतानुपयोगान्नोक्तेति सुस्थितं प्रमातृलक्षणम् ॥४२॥

इत्याचार्यश्रीहेमचन्द्रविरचितायाः प्रमाणमीमांसायास्तद्वृत्तेश्च
प्रथमस्याध्यायस्य प्रथममाह्निकम्[5]

---

१ एकान्तनाशिनी (?) २ अवस्थायाः। ३ –०वतस्तात्त्वात्–डे०। ०स्थासु ततस्त्वात्–तत्त्वसं० का० २२७। ४ एकत्वात्। ५ –०कम्। श्रेयः–ता०।

# ॥ अथ द्वितीयमाह्निकम् ॥

§ १. इहोद्दिष्टे प्रत्यक्षपरोक्षलक्षणे प्रमाणद्वये लक्षितं प्रत्यक्षम् । इदानीं परोक्षलक्षणमाह–

## अविशदः परोक्षम्[1] ॥ १ ॥

§ २. सामान्यलक्षणानुवादेन विशेषलक्षणविधानात् 'सम्यगर्थनिर्णयः' इत्यनुवर्तते। तेनाविशदः सम्यगर्थनिर्णयः परोक्षप्रमाणमिति ॥१॥

§ ३. विभागमाह–

## स्मृतिप्रत्यभिज्ञा[2]नोहानुमानागमास्तद्विधयः ॥ २ ॥

§ ४. 'तद्' इति परोक्षस्य परामर्शस्तेन परोक्षस्यैते प्रकारा न तु स्वतन्त्राणि प्रमाणान्तराणि प्रक्रान्तप्रमाणसङ्ख्याविघातप्रसङ्गात् ।

§ ५. ननु स्वतन्त्राण्येव स्मृत्यादीनि प्रमाणानि किं नोच्यन्ते ?, किमनेन द्रविडमण्डकभक्षणन्यायेन ? । मैवं वोचः, परोक्षलक्षणसङ्गृहीतानि परोक्षप्रमाणान्न विभेदवर्तीनि; यथैव हि प्रत्यक्षलक्षणसङ्गृहीतानीन्द्रियज्ञान-मानस-स्वसंवेदन-योगिज्ञानानि सौगतानां न प्रत्यक्षादतिरिच्यन्ते, तथैव हि परोक्षलक्षणाक्षिप्तानि स्मृत्यादीनि न मूलप्रमाणसङ्ख्यापरिपन्थीनीति । स्मृत्यादीनां पञ्चानां द्वन्द्वः ॥२॥

§ ६. तत्र स्मृतिं लक्षयति–

## वासनोद्बोधहेतुका तदित्याकारा स्मृतिः ॥३॥

§ ७. 'वासना[3]' संस्कारस्तस्याः 'उद्बोधः[4]' प्रबोधस्तद्धेतुका तन्निबन्धना,

"**कालमसंखं संखं च धारणा होइ नायव्वा**" [विशेपा० गा० ३३३]

इति वचनाच्चिरकालस्थायिन्यपि वासनाऽनुद्बुद्धा न स्मृतिहेतुः, आवरणक्षयोपशमसदृशदर्शनादिसामग्रीलब्धप्रबोधा[5] तु स्मृतिं जनयतीति 'वासनोद्बोधहेतुका' इत्युक्तम् । अस्या उल्लेखमाह 'तदित्याकारा'[6] सामान्योक्तौ नपुंसकनिर्देशस्तेन स घटः, सा पटी, तत् कुण्डल[7]मित्युल्लेखवती[8] मतिः स्मृतिः ।

§ ८. सा च प्रमाणम् अविसंवादित्वात् स्वयं[9] निहितप्रत्युन्मार्गणादिव्यवहाराणां दर्शनात् । नन्वननुभूयमानस्य विषयस्याभावान्निरालम्बना स्मृतिः कथं प्रमाणम् ? । नैवम्, अनुभूतेनार्थेन सालम्बनत्वोपपत्तेः, अन्यथा प्रत्यक्ष[10]स्याप्यनुभूतार्थविषयत्वादप्रामाण्यं प्रसज्येत । स्वविषया[11]वभासनं स्मृतेरप्यविशिष्टम् । विनष्टो विषयः कथं स्मृतेर्जनकः ?, तथा-

---

१ अत्र प्रथमं द्वितीयं च सूत्रद्वयं ता–मू० प्रतौ भेदकचिह्नं विना सहैव लिखितं दृश्यते–सम्पा० । २ –०भिज्ञोहा०–सं–मू० । ३ धारणा । ४ स्मृतिजननाभिमुख्यम् । ५–०धा अनुस्मृ०-मु-पा० । ६ अभ्यासदशापन्नायां गुणनादौ तदित्याकाराभावात् प्रायिकमिदम् । ७ कुण्डमि०–डे० । ८ –०वती स्मृ०–डे० । ९ अविसंवादित्वमस्या [अ]सिद्धमिति चेदित्याह । १० यद्यनुभूतेनार्थेन सालम्बनत्वेऽपि स्मृतेरप्रामाण्यमातिष्ठसे तदा प्रत्यक्षस्यापि किं नाप्रामाण्यं भवेदिति एकोद्देशेन तस्यापि निरालम्बनत्वात् । ११ अनुभूतविषय० ।

चार्थाजन्यत्वान्न प्रामाण्यमस्या इति चेत्; तत् किं प्रमाणान्तरेऽप्यर्थजन्यत्वमविसंवादहेतुरिति विप्रलब्धोऽसि? । मैवं मुहः, यथैव हि प्रदीपः स्वसामग्रीबललब्धजन्मा घटादिभिरजनितोऽपि तान् प्रकाशयति तथैवावरणक्षयोपशमसव्यपेक्षेन्द्रियानिन्द्रियबललब्धजन्म संवेदनं विषयमवभासयति । **"नाननुकृतान्वयव्यतिरेकं कारणम् नाकारणं विषयः"** इति तु प्रलापमात्रम्, योगिज्ञानस्यातीतानागतार्थगोचरस्य तदजन्यस्यापि प्रामाण्यं प्रति विप्रतिपत्तेरभावात् । किंच, स्मृतेरप्रामाण्येऽनुमानाय दत्तो जलाञ्जलिः, तया व्याप्तेरविषयीकरणे तदुत्थानायोगात्; लिङ्गग्रहण-सम्बन्धस्मरणपूर्वकमनुमानमिति हि सर्ववादिसिद्धम् । ततश्च स्मृतिः प्रमाणम्, अनुमानप्रामाण्यान्यथानुपपत्तेरिति[3] सिद्धम् ॥ ३ ॥

§ ९. अथ प्रत्यभिज्ञानं लक्षयति—

**दर्शनस्मरणसम्भवं तदेवेदं तत्सदृशं तद्विलक्षणं तत्प्रतियोगीत्यादिसङ्कलनं प्रत्यभिज्ञानम् ॥४॥**

§ १०. 'दर्शनम्' प्रत्यक्षम्, 'स्मरणम्' स्मृतिस्ताभ्यां सम्भवो यस्य तत्तथा दर्शनस्मरणकारणकं सङ्कलनाज्ञानं 'प्रत्यभिज्ञानम्' । तस्योल्लेखमाह—'तदेवेदम्', सामान्यनिर्देशेन नपुंसकत्वम्, स एवायं घटः, सैवेयं पटी, तदेवेदं कुण्डमिति । 'तत्सदृशः' गोसदृशो गवयः, 'तद्विलक्षणः' गोविलक्षणो महिषः, 'तत्प्रतियोगि' इदमस्मादल्पं महत् दूरमासन्नं वेत्यादि । 'आदि'ग्रहणात्—

**"रोमशो दन्तुरः श्यामो वामनः पृथुलोचनः ।**
**यस्तत्र चिपिटघ्राणस्तं चैत्रमवधारयेः ॥"** [ न्यायम० पृ० १४३ ]

**"पयोम्बुभेदी हंसः स्यात्षट्पादैर्भ्रमरः स्मृतः ।**
**सप्तपर्णस्तु विद्वद्भिर्विज्ञेयो विषमच्छदः ॥**
**पञ्चवर्णं भवेद्रत्नं मेचकाख्यं पृथुस्तनी ।**
**युवतिश्चैकशृङ्गोऽपि गण्डकः परिकीर्तितः ॥"**

इत्येवमादिशब्दश्रवणात्तथाविधानेव चैत्रहंसादीनवलोक्य तथा सत्यापयति यदा, तदा तदपि संकलनाज्ञानमुक्तम्, दर्शनस्मरणसम्भवत्वाविशेषात् । यथा वा औदीच्येन क्रमेलकं

---

१ अर्थजन्यत्वात् ज्ञानस्य प्रामाण्याभ्युपगमे मरुमरीचिकादौ जलज्ञानमप्यर्थजन्यत्वात् प्रमाणं स्यात् । अथ प्रतिभासमानार्थजन्यं प्रमाणमिष्यते तदानुमानं न स्यात् प्रमाणम् । अनुमानं ह्यनर्थसामान्यप्रतिभासि, न च तेन जन्यम्, भवन्मते सामान्यस्यावस्तुत्वात् । यत् प्रमाणं तदनर्थजन्य(तदर्थज)मेवेति अतिव्याप्ति (०वेति व्याप्ति)रपि दुष्टा स्वसंवेदनप्रत्यक्षेण व्यभिचारात् तद्धि स्वात्मविषयं, न च तेन जन्यम् । २ व्याप्तेरग्रहणेऽग्रहणं त्वप्रमाणत्वात् । ३ रिति ॥ अथ मु-पा । ४ क्वचिद्द्वयस्ताभ्यामपि यथेदमस्माद्भिन्नमित्यादिकं प्रत्यभिज्ञानं दर्शनादेव स्मरणरहितात् । तस्मात् भिन्नमित्यादिकं केवलादेव स्मरणात् प्रत्यभिज्ञानम् । ५ मदीयेन गृहस्थितेन गवा सदृशोऽयं गवय इत्यादिकम् [अत्र टिप्पणकारेण उभयकारणकत्वं उदाहृतम्-सम्पा०] । ६ एकत्वसादृश्यवैसदृश्यादिनाऽर्थद्वयघटनं सङ्कलना । ७ -०पदै०-मु० । ८ तथा वचनं सत्या०-डे० । ९ संकलनमु०-डे० । १० अत्र उदीच्येन इति सुचारु ।

निन्दतोक्तम् 'धिकरभमतिदीर्घवक्रग्रीवं[1] प्रलम्बोष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयवसन्निवेशमप[2]शब्दं[3] पशूनाम्'इति । तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गतस्तादृशं वस्तूपलभ्य 'नूनमयमर्थोऽस्य करभशब्दस्य'इति [ यद्वेति[4] ] तदपि दर्शनस्मरणकारणकत्वात् सङ्कलनाज्ञानं प्रत्यभिज्ञानम् ।

§ ११. येषां तु सादृश्यविषयमुपमानाख्यं प्रमाणान्तरं तेषां वैलक्षण्यादिविषयं 5 प्रमाणान्तरमनुषज्येत । यदाहुः[5]–

"उपमानं प्रसिद्धार्थसाधर्म्यात् साध्यसाधनम्[6] ।
तद्वैधर्म्यात् प्रमाणं किं स्यात् संज्ञिप्रतिपादनम् ॥" [ लघीय० ३. १० ]
"इदमल्पं महद् दूरमासन्नं प्रांशु[7] नेति वा ।
व्यपेक्षातः[8] समक्षेऽर्थे विकल्पः[9] साधनान्तरम्[10] ॥" [लघीय० ३. १२] इति । 10

§ १२. अथ साधर्म्यमुपलक्षणं योग[11]विभागो[12] वा करिष्यत इति चेत्; तर्ह्यकुशलः सूत्रकारः स्यात्, सूत्रस्य लक्षणरहितत्वात् । यदाहुः–

"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् ।
अस्तोभ[13]मनवद्यं च सूत्रं सूत्रविदो विदुः ॥"

अस्तोभमनधिकम् । 15

§ १३. ननु 'तत्'इति स्मरणम् 'इदम्' इति प्रत्यक्षमिति ज्ञानद्वयमेव, न ताभ्यामन्यत् प्रत्यभिज्ञानाख्यं प्रमाणमुत्पश्यामः । नैतद्युक्तम्, स्मरणप्रत्यक्षाभ्यां प्रत्यभिज्ञाविषयस्यार्थस्य ग्रहीतुमशक्यत्वात् । पूर्वा[14]पराकारैकधुरीणं हि द्रव्यं प्रत्यभिज्ञानस्य विषयः । न च तत् स्मरणस्य गोचरस्तस्यानुभूतविषयत्वात् । यदाहुः[15]–

"पूर्वप्र[16]मितमात्रे हि जायते स इति स्मृतिः । 20
स एवायमितीयं तु प्रत्यभिज्ञाऽतिरेकिणी[17] ॥" [ तत्त्वसं० का० ४५३ ]

नापि प्रत्यक्षस्य[18] गोचरः, तस्य[19] वर्तमानविवर्त[20]मात्रवृत्तित्वात् । न च दर्शनस्मरणाभ्यामन्यद्[21] ज्ञानं नास्ति, दर्शनस्मरणोत्तरकालभाविनो ज्ञानान्तरस्यानुभूतेः । न चानुभूयमानस्यापलापो युक्तः अतिप्रसङ्गात् ।

§ १४. ननु प्रत्यक्षमेवेदं प्रत्यभिज्ञानम् इत्येके[22] । नैवम्, तस्य सन्निहितवार्तमा- 25 निकार्थविषयत्वात् ।

"सम्बद्धं[23] वर्तमानं च गृह्यते चक्षुरादिना" [ श्लोकवा० सूत्र ४ श्लो० ८४ ]

इति मा स्म विस्मरः । ततो नातीतवर्तमानयोरेकत्वमध्यक्षज्ञानगोचरः । अथ स्मरणसह[24]-

१ –०ग्रीवप्र०-ता० । २–०मपसदं –मु० –०मपशब्दं–डे० । ३ निकृष्टम् । ४ तात्पर्य० पृ० १९८ । ५ यदाह–ता० । ६ सादृश्यसाधनम् । ७ दीर्घम् । ८ अपेक्षका ह्यल्पमहदादिव्यापाराः । ९ अक्षनिरपेक्षं मानसं ज्ञानं विकल्पः । १० प्रमाणान्तरं प्राप्नोति । ११ उपमानमिति सूत्रावयवयोगः । १२ उपमानं द्विधा साधर्म्यतो वैधर्म्यतश्चेति विभागः । १३ पूरणार्थवादिनिपातरहितमस्तोभम् । १४ तदेवेदमित्यत्रैकत्वं विषयः, गोसदृशो गवय इत्यत्र तु सादृश्यम् । १५ यदाह–ता० । १६ पूर्वप्रवृत्तमा०–मु–पा । १७ पूर्वप्रमितमात्रादधिका । १८–०स्य तस्य विव०–डे० । १९ तस्येति प्रत्यक्षस्य । २० विवर्तः परिणामः पर्यायः इति यावत् । २१–०मन्यज्ज्ञा०–डे० । २२ वैशेषिकादयः । २३ चक्षुरादीन्द्रियसम्बन्धि । २४ सहायम् ।

कृतमिन्द्रियं तदेकत्वविषयं प्रत्यक्षमुपजनयतीति प्रत्यक्षरूपतास्य गीयत इति चेत्; न, स्वविषयविनियमितमूर्तेरिन्द्रियस्य विषयान्तरे सहकारिशतसमवधानेऽप्यप्रवृत्तेः। नहि परिमलस्मरणसहायमपि चक्षुरिन्द्रियमविषये गन्धादौ प्रवर्त्तते। अविषयश्चातीतवर्तमानावस्थाव्याप्येकं द्रव्यमिन्द्रियाणाम्। नाप्यदृष्टसहकारिसहितमिन्द्रियमेकत्वविषयमिति 5 वक्तुं युक्तम् उक्तादेव हेतोः। किंच, अदृष्टसव्यपेक्षादेवात्मनस्तद्विज्ञानं भवतीति वरं वक्तुं युक्तम्। दृश्यते हि स्वप्नविद्यादिसंस्कृतादात्मनो विषयान्तरेऽपि विशिष्टज्ञानोत्पत्तिः। ननु यथाञ्जनादिसंस्कृतं चक्षुः सातिशयं भवति तथा स्मरणसहकृतमेकत्वविषयं भविष्यति। नैवम्, इन्द्रियस्य स्वविषयानतिलङ्घनेनैवातिशयोपलब्धेः, न विषयान्तरग्रहणरूपेण। यदाह भट्टः—

10 "यश्चाप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात्।
दूरसूक्ष्मादिदृष्टौ स्यात् न रूपे श्रोत्रवृत्तितः॥" [ श्लोकवा० सूत्र २ श्लो० ११४ ]

इति। तत् स्थितमेतत् विषयभेदात्प्रत्यक्षादन्यत्परोक्षान्तर्गतं प्रत्यभिज्ञानमिति।

§ १५. न चैतदप्रमाणम् विसंवादाभावात्। क्वचिद्विसंवादादप्रामाण्ये प्रत्यक्षस्यापि तथा प्रसङ्गो दुर्निवारः। प्रत्यभिज्ञानपरिच्छिन्नस्य चात्मादीनामेकत्वस्याभावे बन्धमो- 15 क्षव्यवस्था नोपपद्यते। एकस्यैव हि बद्धत्वे मुक्तत्वे च बद्धो दुःखितमात्मानं जानन् मुक्तिसुखार्थी प्रयतेत। भेदे त्वन्य एव दुःख्यन्य एव सुखीति कः किमर्थं वा प्रयतेत?। तस्मात्सकलस्य दृष्टादृष्टव्यवहारस्यैकत्वमूलत्वादेकत्वस्य च प्रत्यभिज्ञायत्तजीवितत्वाद्भवति प्रत्यभिज्ञा प्रमाणमिति॥ ४॥

§ १६. अथोहस्य लक्षणमाह—

20 **उपलम्भानुपलम्भनिमित्तं व्याप्तिज्ञानम् ऊहः॥ ५॥**

§ १७. 'उपलम्भः' प्रमाणमात्रमत्र गृह्यते न प्रत्यक्षमेव अनुमेयस्यापि साधनस्य सम्भवात्, प्रत्यक्षवदनुमेयेष्वपि व्याप्तेरविरोधात्। 'व्याप्तिः' वक्ष्यमाणा तस्या 'ज्ञानम्' तद्ग्राही निर्णयविशेष 'ऊहः'।

§ १८. न चायं व्याप्तिग्रहः प्रत्यक्षादेवेति वक्तव्यम्। नहि प्रत्यक्षं यावान् कश्चिद् 25 धूमः स देशान्तरे कालान्तरे वा पावकस्यैव कार्यं नार्थान्तरस्येतीयतो व्यापारान् कर्तुं समर्थं सन्निहितविषयबलोत्पत्तेरविचारकत्वाच्च।

§ १९. नाप्यनुमानात्, तस्यापि व्याप्तिग्रहणकाले योगीव प्रमाता सम्पद्यत इत्ये-

---

१ स्वविषयवार्तमानिकरूपादौ। २ विषयान्तरे गन्धादौ। ३ अदृष्टं भाग्यं कर्मेत्यर्थः। ४ विषयान्तराप्रवृत्तिरूपाद्धेतोः। ५-०श्चासं०-डे०। ६ नहि संस्कृतमपि चक्षुर्गन्धादिग्रहणे शक्तम्। ७ स्वविषय०। ८ दूरसूक्ष्मादिदर्शनेन चक्षुषोऽतिशयो भवति, न श्रवणस्य, रूपविषयेष्वव्यापारात्। ९ नहि रूपे श्रौत्री वृत्तिः संक्रामति। १० विषयभेदादित्ययं हेतुः। ११ यथा स एव क्षिप्रो जक्ष्यते (?)। १२ स एवायमिति। १३-०त्वे सति च-डे०। १४-०स्य दृष्टव्य०-डे०। १५ शब्दानित्यत्वे साध्ये कृतकत्वं हि साधनम् प्रत्ययभेदभेदित्वेनानुमेयम्। १६ वाष्पादिभावेन सन्दिह्यमाने धूमेऽग्नेरनुमेयस्यापि साधनत्वं वक्ष्यते।

वंभूतभारासमर्थत्वात् । सामर्थ्येऽपि प्रकृतमेवानुमानं व्याप्तिग्राहकम्, अनुमानान्तरं वा ? । तत्र प्रकृतानुमानात् व्याप्तिप्रतिपत्तावितरेतराश्रयः[1] । व्याप्तौ हि प्रतिपन्नायामनुमानमात्मानमासादयति, तदात्मलाभे च व्याप्तिप्रतिपत्तिरिति । अनुमानान्तरात्तु व्याप्तिप्रतिपत्तावनवस्था तस्यापि गृहीतव्याप्तिकस्यैव प्रकृतानुमानव्याप्तिग्राहकत्वात् । तद्व्याप्तिग्रहश्च यदि स्वत एव, तदा पूर्वेण किमपराद्धं येनानुमानान्तरं मृग्यते । अनुमानान्तरेण चेत्; तर्हि युगसहस्रेष्वपि व्याप्तिग्रहणासम्भवः ।

§ २०. ननु यदि निर्विकल्पकं प्रत्यक्षमविचारकम् तर्हि तत्पृष्ठभावी विकल्पो व्याप्तिं ग्रहीष्यतीति चेत्; नैतत्, निर्विकल्पकेन व्याप्तेरग्रहणे विकल्पेन ग्रहीतुमशक्यत्वात् निर्विकल्पकगृहीतार्थविषयत्वाद्विकल्पस्य । अथ निर्विकल्पकविषयनिरपेक्षोऽर्थान्तरगोचरो विकल्पः; स तर्हि प्रमाणमप्रमाणं वा ? । प्रमाणत्वे[2] प्रत्यक्षानुमानातिरिक्तं प्रमाणान्तरं तितिक्षितव्यम् । अप्रामाण्ये तु ततो व्याप्तिग्रहणश्रद्धा षण्ढात्तनयदोहदः । एतेन[3]–"अनु[4]पलम्भात् कारणव्यापकानुपलम्भाच्च कार्यकारणव्या[5]प्यव्यापकभावावगमः[6]" इति प्रत्यु[7]क्तम्, अनुपलम्भस्य प्रत्यक्षविशेषत्वेन[8] कारणव्यापकानुपलम्भयोश्च लिङ्गत्वेन[9] तज्जनितस्य तस्यानुमानत्वात्, प्रत्यक्षानुमानाभ्यां च व्याप्तिग्रहणे दोषस्याभिहितत्वात् ।

§ २१. वैशेषिकास्तु प्रत्यक्षफलेनोहापोहविकल्पज्ञानेन व्याप्तिप्रतिपत्तिरित्याहुः । तेषामप्यध्यक्षफलस्य प्रत्यक्षा[10]नुमानयोरन्यतरत्वे व्याप्ते[11]रविषयीकरणम्, तदन्यत्वे च प्रमाणान्तरत्वप्रसक्तिः । अथ व्याप्तिविकल्पस्य फल[12]त्वान्न प्रमाणत्वमनुयोक्तुं युक्तम्; न, एतत्फलस्या[13]नुमानलक्षणफलहेतुतया प्रमाणत्वाविरोधात् सन्निकर्षफलस्य विशेषणज्ञा[14]नस्येव विशेष्य[15]ज्ञानापेक्षयेति ।

§ २२. यौगास्तु तर्क[16]सहितात् प्रत्यक्षादेव व्याप्ति[17]ग्रह इत्याहुः । तेषामपि यदि न केवलात् प्रत्यक्षाद्व्याप्तिग्रहः किन्तु तर्कसहकृतात् तर्हि तर्कादेव व्याप्तिग्रहोऽस्तु । किमस्य तपस्विनो यशोमार्जनेन, प्रत्यक्षस्य वा तर्कप्रसादलब्धव्याप्तिग्रहापलापकृतघ्नत्वारोपेणेति ? । अथ तर्कः प्रमाणं न भवतीति न ततो व्याप्तिग्रहणमिष्यते । कुतः पुनरस्य न प्रमाणत्वम्, अव्यभिचारस्तावदिहापि प्रमाणान्तरसाधारणोऽस्त्येव[18] ? । व्याप्तिलक्षणेन विषयेण विषं[19]-

---

१–०श्रयम्–डे० । २–०त्वे न प्रत्य०–डे० । ३ एतेनानुपलम्भात् कार्य०–डे० । ४ (?) न उपलम्भात् प्रत्यक्षात् । नानुमानात् । नाऽत्र धूमोऽग्नेरभावादित्यनुपलम्भः ॥१॥ नात्र शिंशपा वृक्षाऽभावात् ॥२॥ "धूमाधी[ः] वह्निविज्ञानं धूमज्ञानमधीस्तयोः । प्रत्यक्षानुपलम्भाभ्यामिति पञ्चभिरन्वयः ॥" ५ (?) नास्त्यत्र घटो अनुपलम्भात् स्वप्रत्यक्षानुपलम्भादित्यर्थः, स्वभावानुपलम्भो हि धूमाधीरित्युल्लेखलक्षणः कार्यकारणव्याप्यव्यापकभावावगमे व्यापिपर्ति ततस्तस्मादपि भवति स बौद्धमते । ६ (?) कार्यकारणस्यावगमो व्यापकानुपलम्भाद्व्याप्यव्यापकत्वस्यानुपलम्भात् तूभयस्य किन्तु सोप्यूहादेवेति । ७ निराकृतम् । ८ अनुमानत्वेन । ९ यद्धि लिङ्गाज्जायते ज्ञानं तदनुमानमेव । १० प्रत्यक्षस्य हि फलं प्रत्यक्षमनुमानं वा । तत्र प्रत्यक्षं घटोऽयमिति अनुमानं तु अग्निरत्र धूमादिति । ११ अग्रहणमित्युक्तयुक्तेः । १२ प्रत्यक्षफलत्वेनेति हि उक्तम् । १३ फलस्याप्यनु०– मु–पा० । १४ सामान्यज्ञानाद्विशेषज्ञानम् (?) । १५ विशेष्यज्ञानं विशेषणज्ञानं प्रमाणम् (?) । १६ व्याप्याभ्युपगमे व्यापकप्रसञ्जनं तर्कः । (१७ "व्यापकं तदतन्निष्ठं व्याप्यं तन्निष्ठमेव च । साध्यं व्यापकमित्याहुः साधनं व्याप्यमुच्यते ॥" "प्रयोगेऽन्वयवस्येवं व्यतिरेके विपर्ययः ।" १८–०स्त्वेव–डे० । १९ प्रमेयाधीना प्रमाणव्यवस्था ।

यवत्त्वमपि न नास्ति। तस्मात् प्रमाणान्तरागृहीतव्याप्तिग्रहणप्रवणः प्रमाणान्तरमूहः ॥५॥

§ २३. व्याप्तिं लक्षयति–

**व्याप्तिर्व्यापकस्य व्याप्ये सति भाव एव व्याप्यस्य वा तत्रैव भावः ॥ ६ ॥**

5 § २४. 'व्याप्तिः' इति यो व्याप्नोति यश्च व्याप्यते तयोरुभयोर्धर्मः[3]। तत्र यदा व्यापकधर्मतया विवक्ष्यते तदा 'व्यापकस्य' गम्यस्य 'व्याप्ये' धर्मे 'सति', यत्र धर्मिणि व्याप्यमस्ति तत्र सर्वत्र 'भाव एव' व्यापकस्य स्वगतो धर्मो व्याप्तिः। ततश्च व्याप्यभावापेक्षा व्याप्यस्यैव व्याप्तताप्रतीतिः। नत्वेवमवधार्यते–व्यापकस्यैव व्याप्ये सति भाव इति, हेत्वभावप्रसङ्गात् अव्यापकस्यापि मूर्तत्वादेस्तत्र भावात्। नापि–व्याप्ये सत्येवेत्यवधार्यते,
10 प्रयत्नानन्तरीयकत्वादेरहेतुत्वापत्तेः, साधारणश्च हेतुः स्यान्नित्यत्वस्य प्रमेयेष्वेव भावात्।

§ २५. यदा तु व्याप्यधर्मतया व्याप्तिर्विवक्ष्यते तदा 'व्याप्यस्य वा' गमकस्य 'तत्रैव' व्यापके गम्ये सति यत्र धर्मिणि व्यापकोऽस्ति तत्रैव 'भावः' न तदभावेऽपि व्याप्तिरिति। अत्रापि नैवमवधार्यते–व्याप्यस्यैव तत्र भाव इति, हेत्वभावप्रसङ्गादव्याप्यस्यापि तत्र भावात्। नापि–व्याप्यस्य तत्र भाव एवेति, सपक्षैकदेशवृत्तेरहेतुत्वप्राप्तेः साधारणस्य च
15 हेतुत्वं स्यात्, प्रमेयत्वस्य नित्येष्ववश्यंभावादिति।

§ २६. व्याप्यव्यापकधर्मतासङ्कीर्तनं तु व्याप्तेरुभयत्र तुल्यधर्मतयैकाकारा प्रतीतिर्मा भूदिति प्रदर्शनार्थम्। तथाहि–पूर्वत्रायोगव्यवच्छेदेनावधारणम् उत्तरत्रान्ययोगव्यवच्छेदेनेति कुत उभयत्रैकाकारता व्याप्तेः ?। तदुक्तम्–

"लिङ्गे लिङ्गी भवत्येव लिङ्गिन्येवेतरत् पुनः।
20 नियमस्य विपर्यासेऽसम्बन्धो लिङ्गलिङ्गिनोः॥" इति ॥ ६ ॥

§ २७. अथ क्रमप्राप्तमनुमानं लक्षयति–

**साधनात्साध्यविज्ञानम् अनुमानम् ॥७॥**

---

१ अग्न्यादिः। २ धूमादिः। ३ पर्वतः (?)। ४ अग्नितया। ५ अग्निरूपस्य साध्यस्य। ६ धूमे। ७ पर्वतादौ। ८ धूमः। ९ ननु व्याप्तेरुभयधर्मविशेषे कथं व्याप्तताप्रतीतिः हेतोरेव, न व्यापकस्यापि, हेतोरेव हि व्याप्ततां स्मरन्ति तथा चाहुः–"व्याप्तो हेतुस्त्रिधैव सः" [ हेतु० १ ] इत्याशङ्क्याह—ततश्चेति। १० –०पेक्षया–डे०। ११ व्याप्यस्यैव प्रतीतिः–ता०। १२–०स्यैव व्याप्यताप्रतीतिः–मु०। १३ व्यापकेन साध्येन कर्त्रा व्याप्यभावो व्याप्यत्वं हेतोस्तदा(द)पेक्षते व्याप्तताप्रतीतिः। १४ अग्नेर्हेतुत्वं स्यात् (?)। १५ [अ]व्यापकस्यापि हेतोर्मूर्तत्वादेस्तत्र पर्वते भावात्। १६ कृतकत्वादेः अत्र हि व्याप्यस्य सत्त्वमेव नास्ति विद्युदादिना व्यभिचारात्। विद्युदादौ व्यापकत्वम( कम )नित्यत्वं प्रयत्नानन्तरीयकत्वादिविनाप्यस्ति इति। १७ साधारणहेत्वाभासोऽसम्यग् हेतुः स्यादिति। १८ पर्वतादौ। १९ व्याप्यस्य धूमस्य हेतुत्वं न स्यात्। व्याप्तौ सत्यां हेतुभावः। व्याप्तिस्त्वीदृशी कुत्रापि नास्ति। २० व्यापकस्यापि वह्नेस्तत्र पर्वते भावात्। २१ यत्र व्यापकोऽस्ति तत्र। २२ उभयत्रेति साध्ये साधने च। २३ भाव एव। २४ व्यापकधर्मत्वे। २५ लिङ्ग एव लिङ्गी लिङ्गिनि सति इतरद्भवत्येवेति विपर्यासः।

§ २८. साधनं साध्यं च वक्ष्यमाणलक्षणम्। दृष्टा[1]दुपदिष्टाद्वा[2] 'साधनात्' यत् 'साध्यस्य' 'विज्ञानम्' सम्यगर्थनिर्णयात्मकं तदनुमीयतेऽनेनेति 'अनुमानम्' लिङ्गग्रहणसम्बन्धस्मरणयोः पश्चात्[3] परिच्छेदनम्॥ ७॥

**तत् द्विधा स्वार्थं परार्थं च॥ ८॥**

§ २९. 'तत्' अनुमानं द्विप्रकारं स्वार्थ-परार्थभेदात्। स्वव्यामोहनिवर्तनक्षमम् 'स्वार्थम्[4]'। परव्यामोहनिवर्तनक्षमम् 'परार्थम्[5]'॥ ८॥

§ ३०. तत्र स्वार्थं लक्षयति–

**स्वार्थं स्वनिश्चितसाध्याविनाभावैकलक्षणात् साधनात् साध्यज्ञानम्॥ ९॥**

§ ३१. साध्यं विनाऽभवनं साध्याविनाभावः स्वेनात्मना निश्चितः साध्याविनाभावं[6] एवैकं[7] लक्षणं यस्य तत् 'स्वनिश्चितसाध्याविनाभावैकलक्षणम्' तस्मात्तथाविधात् 'साधनात्' लिङ्गात् 'साध्यस्य' लिङ्गिनो 'ज्ञानम' 'स्वार्थम्' अनुमानम्। इह च न योग्यतया लिङ्गं परोक्षार्थप्रतिपत्तेरङ्गम्, यथा बीजमङ्कुरस्य, अदृष्टाद्[8] धूमादग्नेरप्रतिपत्तेः; नापि स्वनिश्च(स्वविष)यज्ञानापेक्षं यथा प्रदीपो घटादेः, दृष्टादप्यनिश्चिताविनाभावादप्रतिपत्तेः। तस्मात्परोक्षार्थनान्तरीयकतया निश्चयनमेव लिङ्गस्य व्यापार इति 'निश्चित'[9]ग्रहणम्।

§ ३२. ननु चासिद्धविरुद्धानैकान्तिकहेत्वाभासनिराकरणार्थं हेतोः पक्षधर्मत्वम्, सपक्षे सत्त्वम्, विपक्षाद् व्यावृत्तिरिति त्रैलक्षण्यमाचक्षते भिक्षवः। तथाहि–अनुमेये धर्मिणि लिङ्गस्य सत्त्वमेव निश्चितमित्येकं रूपम्। अत्र सत्त्ववचनेनासिद्धं चाक्षुषत्वादि[10] निरस्तम्। एवकारेण पक्षैकदेशासिद्धो निरस्तो यथा अनित्यानि पृथिव्यादीनि भूतानि गन्धवत्त्वात्। अत्र पक्षीकृतेषु पृथिव्यादिषु चतुर्षु भूतेषु पृथिव्यामेव गन्धवत्त्वम्। सत्त्ववचनस्य पश्चात्[11]कृतेनैवकारेणासाधारणो धर्मो निरस्तः। यदि ह्यनुमेय एव सत्त्वमित्युच्येत श्रावणत्वमेव[12] हेतुः[13] स्यात्। निश्चितग्रहणेन सन्दिग्धा[14]सिद्धः सर्वो निरस्तः। सपक्षे एव सत्त्वं निश्चितमिति द्वितीयं रूपम्। इहापि सत्त्वग्रहणेन विरुद्धो निरस्तः[15]। स हि नास्ति सपक्षे। एवकारेण साधारणानैकान्तिकः[16], स हि न सपक्षे एव वर्तते किं तु विपक्षेऽपि। सत्त्वग्रहणात् पूर्वमवधारणकरणेन सपक्षाव्यापिनोऽपि प्रयत्नानन्तरीयकत्वादे[17]र्हेतुत्वमुक्तम्, पश्चादवधारणे

१ दृष्टिपथमागतात्। २ परार्थानुमाने कथितात्। ३ अनेन अतः पश्चादर्थता। ४ स्वस्मायिदं स्वार्थं येन स्वयं प्रतिपद्यते। ५ परस्मायिदं परार्थं येन परः प्रतिपद्यते। ६–० श्चितं सा०–डे०। ७–०भावैक० –डे०। ८–अग्निज्ञानं प्रति धूमस्य योग्यता शक्तिविशेषोऽस्त्येव परं दृष्टो हि धूमो धूमध्वजं गमयति नादृष्ट इति। ९ एतेन धूमो धूमवत्त्वेन निश्चिताविनाभावस्य गमको नान्यथा इत्यावेदितम्। १० यथाऽनित्यः शब्दः चाक्षुषत्वात् घटवदित्यत्र शब्दे चाक्षुषत्वमसिद्धम्। ११ सत्त्वपदाऽग्रतः। १२–०श्रावणमेव–डे०। १३ यथाऽनित्यः शब्दः श्रावणत्वादित्यनित्यत्वे साध्ये श्रावणत्वमेव हेतुर्घटे व्यभिचरतीति। १४ धूमो बाष्पो वा इति सन्देहे धूमादेरग्निसाधनम्। १५ अनेन सत्त्ववचनेन साधारणोऽपि निरस्यते। १६ निरस्त इति संबन्धः। १७ यथा अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् घटवत्। घटे प्रयत्नानन्तरीयकत्वं विद्यते, न विद्युति परम्, तथापि प्रयत्नानन्तरीयकत्वस्य हेतुत्वं सपक्षैकदेशत्वात्।

हि अयमर्थः स्यात्-सपक्षे सत्त्वमेव यस्य स हेतुरिति प्रयत्नानन्तरीयकत्वं न हेतुः स्यात्। निश्चितवचनेन सन्दिग्धान्वयोऽनैकान्तिको निरस्तः यथा सर्वज्ञः[2] कश्चिद्वक्तृत्वात्, वक्तृत्वं हि सपक्षे[3] सर्वज्ञे सन्दिग्धम्। विपक्षे त्वसत्त्वमेव निश्चितमिति तृतीयं रूपम्। तत्रासत्त्व-ग्रहणेन विरुद्धस्य निरासः। विरुद्धो हि विपक्षेऽस्ति। एवकारेण साधारणस्य विपक्षैक-
5 देशवृत्तेर्निरासः, प्रयत्नानन्तरीयकत्वे हि साध्येऽनित्यत्वं विपक्षैकदेशे विद्युदादावस्ति, आकाशादौ नास्ति। ततो नियमेनास्य निरासोऽसत्त्वशब्दात्। पूर्वस्मिन्नवधारणे हि अयमर्थः स्यात्-विपक्ष एव यो नास्ति स हेतुः, तथा च प्रयत्नानन्तरीयकत्वं सपक्षेऽपि नास्ति ततो न हेतुः स्यात्ततः पूर्वं न कृतम्। निश्चितग्रहणेन सन्दिग्धविपक्षव्यावृत्तिकोऽनैका-न्तिको निरस्तः। तदेवं त्रैरूप्यमेव हेतोरसिद्धादिदोषपरिहारक्षममिति तदेवाभ्युपगन्तुं
10 युक्तमिति किमेकलक्षणकत्वेनेति ?।

§ ३३. तदयुक्तम्, अविनाभावनियमनिश्चयादेव दोषत्रयपरिहारोपपत्तेः। अवि-नाभावो ह्यन्यथानुपपन्नत्वम्। तच्चासिद्धस्य विरुद्धस्य व्यभिचारिणो वा न सम्भवति। त्रैरूप्ये तु सत्यप्यविनाभावाभावे हेतोरगमकत्वदर्शनात्, यथा स श्यामो मैत्रतनयत्वात् इतरमैत्रपुत्रवदित्यत्र। अथ विपक्षान्नियमवती व्यावृत्तिस्तत्र न दृश्यते ततो न गम-
15 कत्वम्; तर्हि तस्या एवाविनाभावरूपत्वादितररूपसद्भावेऽपि तदभावे[11] हेतोः स्वसाध्य-सिद्धिं प्रति गमकत्वानिष्टौ सैव प्रधानं लक्षणमस्तु। तत्सद्भावे[12]ऽपररूपद्वयनिरपेक्षतया गमकत्वोपपत्तेश्च, यथा सन्त्यद्वैतवादिनो[13]ऽपि प्रमाणानि इष्टानिष्टसाधनदूषणान्यथानुप-पपत्तेः। न चात्र पक्षधर्मत्वं सपक्षे सत्त्वं चास्ति, केवलमविनाभावमात्रेण गमकत्वोप-पत्तिः[15]। ननु पक्षधर्मताऽभावे श्वेतः प्रासादः काकस्य कार्ष्ण्यादित्यादयोऽपि हेतवः
20 प्रसज्येरन्; नैवम्, अविनाभावबलेनैवापक्षधर्माणामपि गमकत्वाभ्युपगमात्। न चेह सोऽस्ति। ततोऽविनाभाव एव हेतोः प्रधानं लक्षणमभ्युपगन्तव्यम्, सति तस्मिन्नसत्यपि त्रैलक्षण्ये हेतोर्गमकत्वदर्शनात्। न तु त्रैरूप्यं हेतुलक्षणम् अव्यापकत्वात्[16]। तथा च सर्वं क्षणिकं सत्त्वादित्यत्र मूर्द्धाभिषिक्ते साधने सौगतैः सपक्षेऽसतोऽपि हेतोः सत्त्वस्य गम-कत्वमिष्यत एव। तदुक्तम्-

25 "अन्यथाऽनुपपन्नत्वं यत्र तत्र त्रयेण किम् ?।
नान्यथानुपपन्नत्वं यत्र तत्र त्रयेण किम् ?।।" इति।

---

१ सपक्षे दर्शनमन्वयः। २ मीमांसकं प्रति जैनो वक्ति। ३ सर्वज्ञस्य सर्वस्य सपक्षत्वात्। ४ अनित्यो घटः कृतकत्वात् शब्दवत्। कृतकत्वं शब्देऽस्ति नाकाशादौ। ५ यथा प्रयत्नानन्तरीयकः शब्दो अनित्यत्वात् घटवत्। ६ सपक्षे त्वस्ति एव। ७ यथा असर्वज्ञोऽयं वक्तृत्वात्। ८ अनैकान्तिकस्य। ९ पूर्वस्मिन्ननुमाने। १० पक्षधर्मत्वसपक्षसत्त्वलक्षणं रूपद्वयं। ११ विपक्षान्नियमवत्या व्यावृत्तेरभावे। १२ विपक्षान्नियमवत्या व्या-वृत्तेः। १३ शून्याद्वैतवादिनः। १४ तन्मते प्रमाणलक्षणः पक्षोऽपि नास्ति कुतः पक्षधर्मता ?। १५ -०पपत्तेः- सु-पा०। १६ स श्यामो मैत्रातनयत्वादित्यादौ।

